अपः पश्येय(द)तो देवारि(इ)ति ॥ १३ ॥

पाद्यमित्युक्ते तूष्णीमादाय मन्त्रेण पश्येत् ॥ १३ ॥

सव्यं पादमवसिञ्चेत्सव्यमिति ॥ १४ ॥

दक्षिणं दक्षिणमिति ॥ १५ ॥

स्पष्टे ॥ १४ ॥ १५ ॥

उभौ शेषेण ॥ १६ ॥

पूर्वमन्यमिति मन्त्रेणोभौ पादाववसिञ्चेत् ॥ १६ ॥

अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् ॥ १७ ॥

अर्घ्यमिति त्रिरुक्ते मन्त्रेण प्रतिगृह्य तूष्णीमात्मानमभ्युक्षेत् । अथ वस्त्रादीनां दानम् ॥ १७ ॥

यशोऽसीत्याचमनीयम् ॥ १८ ॥

आचमनीयमित्युक्त यशोऽसीति प्रतिगृह्य तूष्णीं पीत्वाऽऽचामेत् ॥ १८ ॥

यशसो यशोऽसीति मधुपर्कम् ॥ १९ ॥

मधुपर्क इत्युक्ते मन्त्रेण प्रतिग्रहः ॥ १९ ॥

त्रिः पिबेद्यशसो महसः श्रिय इति ॥ २० ॥

यशसो भक्षोऽसि यशो मयि धेहि स्वाहा । महसो भक्षोऽसि महो मयि धेहि स्वाहा । श्रियो भक्षोऽसि श्रियं मयि धेहि स्वाहा । स्वाहाकारान्ताः सूत्रकारवचनात् ॥ २० ॥

तूष्णीं चतुर्थम् ॥ २१ ॥

स्पष्टम् ॥ २१ ॥

भूयोऽभिवाद्य ब्राह्मणायोच्छिष्टं दद्यात् ॥ २२ ॥

अन्ते सकृदाचमनम् । वाक्यशेषात्सिद्धे दद्यादिति ब्राह्मणालाभेऽद्भिः संप्रोक्ष्यान्यस्मै दानार्थम् ॥ २२ ॥

गां वेदिताऽनुमन्त्रयेत मुञ्च गामिति ॥ २३ ॥

स्पष्टम् ॥ २३ ॥

अमुष्य चेत्यर्हयितुर्नाम ब्रूयात् ॥ २४ ॥

विष्णुशर्माणं चोभयोरिति दातुर्नाम ब्रूयात् । विष्णुशर्मणे गृहमर्चन्त-